# जाबालोपनिषत्

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेम देवहितं यदायुः
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु
ॐ शान्तिः शान्तिः शान्तिः

बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव मन्येत तदविमुक्तमेव । इदं वैकुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति तस्मादविमुक्तमेव निषेवेत अविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्यः

इति प्रथमः खण्डः

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति । स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीतिसर्वानिन्द्रियकृतान्दोषान्वारयतीति तेन वरणा भवति सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नासी भवतीति । कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवतीति । एतद्वैसंधिं संध्यां ब्रह्मविद उपासत इति सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेतदेवं वेदेति

इति जाबालोपनिषत्सु द्वितीयः खण्डः

अथ हैनं ब्रह्मचारिण ऊचुः किं जाप्येनामृतत्वं ब्रूहीति । स होवाचयाज्ञवल्क्यः शतरुद्रियेणेत्येतानि ह वा अमृतनामधेयान्येतैर्ह वा अमृतोभवतीति । एवमेवतद्याज्ञवल्क्यः

इति जाबालोपनिषत्सु तृतीयः खण्डः

अथ ह जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् संन्यासमनु-ब्रूहीति । स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वावनी भवेत् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वावनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् । तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति ।तदु तथा न कुर्यादाग्नेयीमेव कुर्यात् । अग्निर्ह वै प्राणः प्राणमेवैतया करोतिप-श्चात्त्रैधातवीयामेव कुर्यात् । एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति । अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो-वर्धय रयिम् इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणः प्राणंगच्छ स्वाहेत्येवमेवैतदाह । ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत् । यद्यग्निंन विन्देदप्सु जुहुयात् । आपो वै सर्वा देवताः । ॐसर्वाभ्यो देवताभ्योजुहोमि स्वाहेति हुत्वा समुद्धृत्य प्राश्नीयात्साज्यं हविरनामयं मोक्षमन्त्रस्त्रय्येवंविन्देत् । तद्ब्रह्मैतदुपासितव्यम् । एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः

इति जाबालोपनिषत्सु चतुर्थः खण्डः

अथ हैनमत्रिः पप्रच्छ । याज्ञवल्क्य पृच्छामि त्वा याज्ञवल्क्य अयज्ञोप-वीती कथं ब्राह्मण इति । स होवाच याज्ञवल्क्य इदमेवास्य तद्यज्ञोपवीतं यआत्मा प्राश्याचम्यायं विधिः परिव्राजकानाम् । वीराध्वाने वाऽनाशके वाऽपां प्रवेशे वाऽग्निप्रवेशे वा महाप्रस्थाने वाऽथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति । यद्यातुरः स्या-न्मनसा वाचावा संन्यसेत् । एष पन्था ब्रह्मणा हानुवित्तस्तेनैति संन्यासी ब्रह्म विदित्येवमेवैष भगवन्निति वै याज्ञवल्क्यः

इति जाबालोपनिषत्सु पञ्चमः खण्डः

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रे-यरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रि-दण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् । यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथो-

क्तकालेविमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम स परमहंसोनामेति

इति जाबालोपनिषत्सु षष्ठः खण्डः

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेम देवहितं यदायुः
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु

ॐ शान्तिः शान्तिः शान्तिः

इत्यथर्ववेदे जाबालोपनिषत्समाप्ता